॥ श्रीः शरणम् ॥

माघाङ्कः

# मधुरवाणी

संस्कृतमासपत्रिका

प्रधान सम्पादकः
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः
पं. बुर्लीश्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

सहसम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः
सं. सा. सुधाकरः

वार्षिकं मूल्यम् रूप्यकचतुष्टयम्

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१२ वर्षे ] १८६९ शकस्य [ ११ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

---

# हन्त ! अस्तङ्गमितं दिव्यज्योतिः

बहोः कालाद् भारतगगनाङ्गणे दैदीप्यमानं पारतन्त्र्यान्धकारपटलसमुत्पाटने प्रकटिताप्रतिमपाटवं स्वातन्त्र्यविरोधिदिवान्धनयनान्धीकरणकौशलबन्धुरं प्रशान्ततमं **महात्मा**भिधं दिव्यं ज्योतिर्हन्त ! अस्तङ्गतम्—नहि—अस्तमुपनीतं केनापि नरपशुनेति लिखितुं कम्पते करः, स्रंसते लेखनी, अन्धीभवति चक्षुरविरलबाष्पधाराभिः, कुण्ठीभवति मतिः, स्तब्धीभवति चेतः । विक्लवीभवत्यात्मा च ।

स्वार्थलोलुपतया श्वापदस्येव हिंसैकपरायणस्य जगतः क्षेमाय येन महात्मना अहिंसाप्रसाराय सर्वमेव स्वीयमायुर्व्ययीकृतम्-पालितमखण्डमहिंसाव्रतम्, निरन्तरीकृतं निरन्तरमुपदेशवचनैरन्तरिक्षम्, प्लावितं च लेखामृतैर्भारतं,

आयासितश्चात्मा दिगन्तव्यापिना सञ्चारेण अनुभूतानि बहूनि कष्टानि हन्त तस्यैव महात्मनो गान्धीमहाभागस्य प्राणापहा हिंसा केनापि नरपिशाचेन कृतेति महद्दुःखाकरोति चेतः समुत्खनितसन्निहितसमृद्धजलकूपस्येव तृषया निधनमिव ।

येन हि स्वातन्त्र्यसूर्यसन्दर्शनाय स्वदृष्टसत्याग्रहमहामन्त्रोऽपूर्वो जगति फलैर्ग्रहिरुपदिष्टः, स्वपथानुयायिने भारताय च सन्दर्शितश्च स्वातन्त्र्यप्रभाकरः तस्य महात्मनो निधनमुपश्रुत्य कस्य वा सचेतसो न स्याद्दुःखभराकुलं मानसम् महात्मनो विरहेण मुग्धैर्विदेशीयैरपि महाजनैः ।

**"गुणवद्विलये न शोकभाग् भुवि को वा मनुजो विवेकवान्" ॥**

देवि अहिंसे ! अद्य अनाथासि । हा सत्यदेव । निराश्रयः संवृत्तोऽसि ! अहह ब्रह्मचर्य नष्टचर्यमसि । हन्त । अस्तेय । निस्तेजस्कमसि । हा सत्याग्रह सखे ! ग्रहग्रस्तोऽसि ! हा शान्तिदेवि निरवलम्बासि । हा भारतमातः दुर्भागधेयाऽसि हा स्वातन्त्र्य ! तातविरहितोऽसि यदेतत्सर्वगुणाकरो महात्मा दृष्टिपथाद्दूरं गतः पुनरदर्शनायास्माकं दौर्भाग्येन ।

अन्तःकलहदावानलज्वालाजालजटिलेऽस्मिन् कराले काले शान्तिसुधासेचनैकनिरतं महात्मानं परलोकं नीतवता किं वा साधितं करुणालेशविकलेन कालहतकेन । अर्धोदितः स्वतन्त्ररविःपुना राहुणा ग्रस्येतेति बाधते काञ्चन भीतिः । नाद्यापि स्थैर्यमुपगतं चिरात्कष्टात्संपादितं स्वराज्यम् । नाद्यापि शममुपगतः पाकिस्थानसमरकोलाहलः । नाधुनापि विलयमुपगता कृष्णापणपिशाचिका, नेदानीमपि नष्टा वणिजां स्वार्थान्धता नेहापि ध्वस्ता दुर्वृत्तानां जात्यन्धता ।

हन्त ! एतस्मिन्नेव विषये समये सर्वानर्थनिवारणक्षमं महात्मानमुपनयता महदेवापकृतं कालेनेति शोचामस्तमाम् । परलोकेऽपि देवदैत्यांःकलहोप-



शमाय चिरशान्तिप्रस्थापनाय किं कालेनाकारितो महात्मा । किंवा दानवैरपहृतं स्वाराज्यं पुनः शान्तिमार्गेणासादयितुं हिंसायै जुगुप्समानेन पुरुहूतेन सुरलोकं नीतः । आहोस्वित् दस्युभिर्वाणिज्यमिषेण प्रविश्य मिथःकलहमुत्पाद्य स्वाधत्तीकृतं निजराज्यं सत्याग्रहसमरेण संपादयितुं मार्गदर्शनाय देवैराहूतो दिवं गतः । केनापि वा हेतुना भवतु महात्मनः परलोकगमनम्, परं तेन दुर्भाग्धेयस्य भारतस्य कदाप्यपूरणीया महती विनष्टिः संजातेति दुनोति नितरां चेतः।

अस्मिन्दुस्सहप्रसंगे भगवानन्यस्य महात्मनो वितरणेन विपन्नं प्रपन्नंच भारतं समुद्धरेदिति तमनन्यभावेन प्रार्थयामहे ।

---

## जगद्गुरुरस्तंगतः

श्रीश्रीमत्परमहंसेत्यादिबिरुदावालिममलंकुर्वाणा द्वैतसिद्धान्तप्रतिष्ठापनाचार्यवर्याः श्रीश्रीमदुत्तरादिमठाधीश्वरा यतिसार्वभौमा जगद्गुरवः श्री १०८ श्रीमत्सत्याभिज्ञतीर्थपूज्यचरणाः पुष्यकृष्णाष्टम्यां तिथौ प्रातरेव कृतस्नानजपध्याना हरिपुरं जग्मुरिति वृत्तमाकर्ण्य अखिलोपि वैष्णवसमाजः असह्येन महता शोकभारेणाक्रान्तस्समभवादित्यत्र नास्ति विप्रतिपत्तिः । महाभागा इमे बाल्ये

एव समधीतन्यायवेदान्तसाहित्या द्वित्रिवर्षेभ्यः प्रागेव आसन्नत्रिंशवर्षदेशीया अपि प्रबलवैराग्यभाग्यभाजो ज्ञानभक्तिसंभृता युवानोपि श्रीश्रीमदुत्तरादिमठाधीश्वरेभ्यः श्रीसत्यप्रज्ञतीर्थपूज्यचरणेभ्यः सन्यासमधिगत्य वेदान्तविद्यासाम्राज्यपरिपालने बद्धपरिकराः श्रीमन्यायसुधादिदिव्यग्रन्थाध्यापनैकनिरताः श्रीजानकीसमेतमूलदिग्विजयरामबादरायणविजयविठ्ठलादिभगवन्मूर्तिपूजनादिविविधकर्तव्यकर्मपरायणा आश्रमोचितकर्मानुष्ठानेन सन्यासिनामितरेषामादर्शभूताः कंचित्कालमात्कूरक्षेममध्यवसन्

श्रीमट्टीकाकृत्पादसन्निधानमहिते मलखेडक्षेत्रे दिव्यानेकमहद्ग्रन्थपाठमंगलमनुष्ठाय भगवते समर्पयामासुः । दिगंतविख्यातयशोभिः पण्डितमण्डलीमण्डनायमानैरौदार्यवीर्यधैर्यादिगुणगणवर्णनीयचरितैः पूर्वाश्रमे एव प्रवर्तितां श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीं नाम सभां महाभागा एते प्रतिवत्सरमपि यथापूर्वं प्रचाल्य त एवैते अभिनवमूर्तय इवेति भावनामुद्भावयंतिस्म । यस्मिन् किल सभारूपे ज्ञानयज्ञे विद्वद्भ्यो विद्यार्थिभ्यश्च सहस्राधिकेभ्य आसन्नलक्षं धनमत्यधिकं प्रयच्छन्तो विस्मापयंतिस्म लोकम् ।

गतवत्सरे एव महोदाराः "पादैः पुनन्तः पृथिवीं दर्शयन्तो हरेः पदम् । धूतदुस्समयध्वान्ता आदित्या इव गां गता इति वचनमनुस्मारयन्तो भूवैकुण्ठनाम्ना सुप्रसिद्धं वेंकटाद्रिमुपगम्य तत्र श्रीम. सि. वृ. कारिणीं सभां प्रवर्त्य श्रीश्रीनिवासं सम्यगपरोक्षीकृत्य ततो दक्षिणदेशप्रसिद्धतीर्थक्षेत्रादिषु संचर्य सेतुबन्धरामेश्वरमगच्छन् । ततः क्रमेण संचरन्तः कर्णाटकमण्डलमुपेत्य राणीबिन्नूरमध्यवसन् । हा करालः कालः कबलीकर्तुमेतान् दुश्चिकित्स्यं रोगमुत्पाद्य चांते आत्मसादकरोदिति हंत धिक्कष्टमापतितं वैष्णवसमाजस्य । आत्मा अमर इत्यतो महाभागा नश्वरमिमं देहं परित्यज्य भगवत्पदसन्निधाने तदनुग्रहपात्रतया चिरं शांतिमनुभवेयुरेवेत्यलं पल्लवितेन ।

## श्रीश्री १०८ श्रीमत्सत्यप्रमोदतीर्थानाम् पट्टाभिषेकः

आभिजात्यसुप्रसिद्धे गुत्तलोपाह्वकुले लब्धजन्मानः न्याय—वेदान्त—साहित्यादिशास्त्रपारावारपारीणाः गुरुराजाचार्यवर्याः शमदमादिगुणगणसम्पन्नाः

श्रीश्रीमदुत्तरादिमठाधीश्वरेभ्यो यतिसार्वभौमेभ्यो जगद्गुरुभ्यो वैराग्यभाग्यभूषिताः सन्यासाश्रमं विधिपूर्वमंगीकृत्य वेदान्तविद्यासाम्राज्यपरिपालने समभिषिक्ता अभवन्निति समुपनिशम्य परां कोटिमधिरुह्यामो वयं प्रहर्षगिरिशिखरस्य।

पूर्वाश्रमे एवैते महिशूरराजधान्यां श्रीश्रीमदुत्तरादिमठीयमहाविद्यालये प्रधानाध्यापकतामंगीकृत्य न्याय-वेदान्त-साहित्यशास्त्राण्यध्यापयंतिस्म। महोदया इमे द्वित्रिदिनेभ्यः प्राक् असहायनिर्वासितानां दयनीयामवस्थामाकर्ण्य तद्दुःखपरिजिहीर्षया पंचशतरूप्यात्मकं यद्धनं समार्पयन् तदिदमतिशयेनाभिनन्दनीयमेवेति को न ब्रूयात् । मनस्विमूर्धन्यमणय इमे परंपराप्राप्तानेकविद्यालयपरिपालनमुद्वहन्तोपि तत्रतत्र अनेकेष्वावश्यकेषु नगरेषु ग्रामेषु च नवनवान् विद्यालयान् प्रतिष्ठाप्य विविधविद्योज्जीवने बद्धदीक्षा भवेयुरित्याशास्महे ।

घोरकलिमहिम्ना लुप्तसत्तत्वप्रचारे कराले कालेऽस्मिन् सद्वैष्णवसमाजश्रेयोभिवृद्धये तत्वावबोधनचतुरान् सदाचारपरिशुद्धान् प्रचारकान् नियोजयेयुरिति तथा विविधभाषासु नियतकालिकपत्रप्रकाशनेन अमुद्रितानेकसद्दिव्यग्रन्थप्रकाशनेन केन्द्रस्थले प्राच्यार्वाचीनविविधग्रन्थसंग्रहालयप्रतिष्ठापनेन आदर्शविद्वद्रत्ननिर्माणेन ब्रह्मवर्चोभास्वरमंत्रतेजस्सिद्धिशालिजननिर्माणेनच सर्वेषामितरेषां पीठाधीश्वरगणामादर्शभूता भवन्तु इति भक्तिनम्रा विनयावनतमस्तका असकृद्भक्तवत्सलं दीनदयालुं करुणावरुणालयं निरवधिकानन्तकल्याणगुणपरिपूर्णं लक्ष्मीनारायणम् संप्रार्थ्य विरमामो विस्तरात् ।

---

## महात्मनो गान्धीमहाभागस्य

# उपदेशसुधाबिन्दवः

" सत्यमेवास्माकं सन्ति प्रत्यूहा हिमालयसदृक्षाः । यथा अन्तराया महान्तस्तथा तद्दूरीकरणाय सुन्दरा उपाया अपि वर्तन्तेऽस्माकं सविधे । वयं प्राचीनार्याणां वंशजाः । रोम—ग्रीस—इजिप्तादिदेशानां संस्कृतिक्षपस्य साक्षिणः स्मो वयम् । अस्माकं संस्कृतौ सागरे इव वृद्धि—ह्रासप्रसङ्गा नैके समापतिताः। तथापि सा सरित्पतिरिव निश्चलपथादच्युतैव विभ्राजते । अस्मद्देशेसर्वप्रकारैः

स्वतन्त्रतया स्थातुं विद्यते विपुला सामग्री । महान्तो बहवश्च सन्ति शैलाः । शतशो वहन्ति सरितः । सृष्टिसौन्दर्यं विराजत्यनन्यादृशम् । देशोऽयं तपस्यायाः कुलभवनम् । इयत्यां सामग्र्यां सत्यां यदि वयमलौकिककार्यकरणेन जगति शान्तिस्थापने न शक्नुयाम तर्हि, अस्माकं पूर्वजानां विमलयशसः कुलङ्कीकरणदुरितमासादितं स्यात् । ”

## २ धर्मबलस्यावश्यकता

“ मानवः किंजातीयो वा किंव्यवसायो वा कियद्योग्यतो वा भवतु, धर्मबलसाहाय्यं विना तस्य न कदापि स्यात्समुन्नतिः । मन्येऽहम्—धर्मोऽयं जीवनस्य मूलसूत्रम् । अन्तःकरणगम्यो हि धर्मः । बुद्धिबलेन न प्राप्यते सः। अन्तर्निहितधर्मशक्तिरियं बाह्यशक्तिप्रभावेण जागृता स्याद् अथवा हृदयादेव विकसिता भूयात्, परमस्माकं किमपि कार्यं यदि निर्दोषं स्थिरं च चिकीर्ष्यते तर्हि धर्मभावनेयमाविर्भावनीयैवावश्यम् । अस्माकं धर्मशास्त्रैः कथितानां जीवनसूत्राणां व्यवहारे कार्यक्षमतापादनं विना नान्या गतिः ” ।

---

# शोकसभा

पौषवद्यचतुर्दश्यां [ १८६९ ] रवौ गीर्वाणवाग्वर्धिन्यां सभायां [ पुण्यपत्तने ] महात्मनां गान्धीमहाशयानां कृते शोकसभासमभूत् । एकं शोकव्यञ्जकं प्रस्तावं विधाय श्रीमतां देवीदासगान्धीमहाशयानां सविधे प्रेषितश्च ।

.... .... .... .... ....

बेळगांवनगरे गीर्वाणवाग्वर्धिनी —मधुरवाणीसंस्थासंकालितसभायां महात्मनां गान्धीमहाशयानां निधनमुद्दिश्य सबाष्पप्रसरं सगद्गदस्वरं हाहाकारमुखरितः शोकप्रस्तावः स्वीकृतौ दुःखभरभुग्नेनचेतसा । अन्वदर्शि च महात्मनां गान्धीमहापुरुषाणां बन्धुभिस्तीव्रसहवेदनानुभवश्च ।

---

( विंशपृष्ठादग्रिमम् )

अत्यन्तस्पृहणीयमद्भुततमं दिव्यं तवार्चात्मकं-
रूपं मङ्गलमेव सर्वसुलभं वाञ्छन्ति सर्वे बुधाः ।
एतद्भिन्नपरादिमूर्तिषु रमे नैवादरं कुर्वते
को वा हस्तगतं विमुच्य सलिलं वाञ्छेत् घनस्थं म[illegible] ॥७॥

मदीयविपदावलीविघटनाय विश्वाम्ब ते
चतुर्मुखमुखामरप्रवरमौळिभूषायितम् ।
अपारभवसागरोत्तरणपोतपात्रीभव-
न्मनोहरपदाम्बुजद्वयमहर्निशं भावये ॥८॥

चन्द्रातिशायि मुखमम्बुजलोचने ते-
मन्दस्मितञ्च कमनीयकटाक्षवीक्षा ।
पद्मारुणं पदयुगं सुपरिष्करोति
स्वन्तं ममापि कलुषं कलशाब्धिकन्ये ॥९॥

नैवास्थातुं पुरस्तात्प्रभवति भयकृद्भीमकायः कृतान्तो-
ऽप्यस्माकं देवराजप्रियतमवनिते देहबन्धव्यपाये ।
यस्माच्छ्रीरङ्गरामानुजमुनितिलकैर्वीतरागाग्रगण्यैः-
त्वय्येव न्यस्तभारा वयमिह भवतीपादपद्मान्तरङ्गैः ॥१०॥

आरुह्यान्दोलिकायां करिगिरिनिलये लीलया संचरन्त्यां
पत्या साकं भवत्यां नवनवसुषुमां संततं तेऽनुभूय ।
दिव्यायोध्यानिवासादधिकतममुदं भेजिरे देशिकेन्द्राः
कांचीवासे शठद्विड्यतिपतिनिगमान्तार्यमुख्या महान्तः ॥११॥

विरिंचिश्रीकण्ठप्रभृतिविबुधानामुदधिजे
तृणीकृत्याशेषं विभवमपि मायाशबळितम् ।

महात्मानः केचित्तव चरणकैङ्कर्यरसिकाः
क्षिपन्ति श्रीकांच्यां क्षणमिव बहून्वत्सरगणान् ॥१२॥

वेलातीतकृपानिधे मधुरिपोर्वक्षस्तटीमण्डनं
राकाकालिकचन्द्रबिम्बवदना मन्दस्मितालङ्कृता ।
कांचीसीमनि पंचकालनिरतैरेकान्तिभिस्सेविता
काचिद्दीव्यतु सर्वलोकजननी लोकोत्तरा देवता ॥१३॥

---

## विज्ञप्तिः

जगद्ववन्द्यानां महात्मनां गान्धीमहोदयानाम् अतिघोरेण गर्ह्यतमेन संहारेण नितांतं दुःखितस्वान्ततया अङ्कोऽयं न्यूनपृष्ठः समजनि । देशेऽस्मिन् प्रक्षुब्धा जना निरपराधिहिंसातत्परा न मनश्शान्तिमुत्पादयन्ति । न जानीमः कदा वा शान्तिरुत्पद्य सर्वमपि जगत् सुखयेदिति । सर्वथा भगवान्दीनदयालुः परिपूरयतु मनोरथमिति संप्रार्थयामहे ।

---

# त्रयोविंशे निखिलभारतीयशिक्षासंमेलने प्राच्यसंस्कृतविभागाध्यक्षस्य निवेदनम् ।

( दिवेकरोपाह्वस्य रामचन्द्रतनूजस्य हरेः )

हरिः ॐ । सह नाववतु । सह नौ भुनक्तु ।
सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु
मा विद्विषावहै । ॐ शान्तिः ३ ।

---

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं संनिधिं संनिधिं क्रियात् ॥

---

अयि त्रयोविंशस्य निखिलभारतीयशिक्षासंमेलनस्य प्राच्यसंस्कृतविभागस्य सदस्याः,

अद्य भवादृशानां पण्डितवराणां समाजे स्वविचारान्विवृण्वतः मे मनसि महान् संतोषः संजातः । मद्विचारविवरणार्थं एकस्यापि शब्दस्योच्चारणात् प्राक् यैर्मादृशः सामान्यो जनः अस्मिन्महनीये अध्यक्षपदे संस्थापितः ये च भवन्तः मम विचारान् श्रोतुमत्र संमिलिताः, तेषां सर्वेषां श्रीमतां धन्यवादप्रदर्शनं मम प्रथमकर्तव्यतामापतितम् । यैर्भवद्भिः सर्वैरयं मृण्मयो गणेशः गुणेश इति प्रतिष्ठापितः, तैरेवाधुना मम निर्वाहः सम्यक्कार्य एव । 'सज्जनानामाज्ञा शिरोधार्या' इत्येव स्वगुणदोषान् सम्यक् जानतापि मया स्वीकृतमेतत्पदम् । अतः अस्य कार्यस्य संचालने ये केच प्रमादाः मत्सकाशाद्भवेयुः, तेषामर्थे पूर्वमेव क्षमायाचनं कृत्वा स्वस्य अध्यक्षीयं निबन्धं पठामि प्रार्थयामि च

'ते सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा' ॥ इति ।

अयि सज्जनाः, अयमस्माकं प्राच्यसंस्कृतविभागः अस्मिन् शिक्षासंमेलने त्रिचतुरवार्षिकः पंचवर्षीयो वा । तस्मात् प्राक् आंग्लभाषाडिण्डिमेन बधिरीभूतानां, पश्चिमायां दिशि दृश्यमानं भौतिकसंस्कृतिरूपं धूमकेतुं दृष्ट्वा चकितनेत्राणां भारतीयानां हृदये न कदाप्याविर्भूत एष विचारः, यद्वर्तते अस्माकमपि भाषा देववाणी इति, अस्माकमप्यस्ति संस्कृतिः आत्मिकी, अस्माकमप्यासीदयं दर्पः, यत्

'अस्मद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ॥ इति ।

भवतु । अकरणाद्विलंबितकरणं श्रेयः । को हेतुरासीदस्य विभागस्य निर्माणे इति पृच्छता मया ज्ञातं यदयं विभागः स्वभ्रातृव्यविभागेन सह एतासां भाषाणां न केवलं पुनरुज्जीवनार्थं, अपितु आधुनिकीनां आवश्यकतानां दृष्ट्या तासामन्तः नूतनं चैतन्यं प्रवेशयितुं निर्मित इति । अस्मिन् त्रिचतुराणां वर्षाणां ह्रस्वे अवधौ आसां भाषाणां कियदुज्जीवनं जातं, किंप्रकारकं चैतन्यमासु प्रसृतं, इत्यहं न जाने । भ्रातृव्यभाषाविभागविषये न किमपि जानामि, न च किंचन ब्रवीमि, यतः संस्कृतपण्डितानां वर्तते प्राचीना परंपरा यत् 'न वदेद्यावनीं भाषाम्' इति । अस्माकमस्मिन् संस्कृतविभागविषये केवलं एतदेव मे विदितं यदेकस्मिन् वत्सरे, अनेन विभागेन एको विचारः प्रस्तावितः प्रमाणीकृतश्च यत् 'सर्वासु सार्वजनिकपरीक्षासु अम्लेच्छानां विद्यार्थिनां कृते संस्कृतभाषा आवश्यकविषयेषु नियोक्तव्या' इति । अन्यतरस्मिन्वर्षे संस्कृतपाठशालानां दशा नितान्तं दयनीया इति मत्वा तासामुद्धारार्थं विभागस्यास्य सभापतिना सूचितमासीद्यत् 'अयं संस्कृतपाठशालोद्धारविषयः हिंदुधर्मस्य पुनर्नवीकरणं, प्राकृतभाषाभिः विद्याध्ययनं च, एतद्विषयद्वयेन सह संबद्धः' इति । अस्य विभागस्य एवमप्रकाशकं कुप्रकाशकं वा इतिहासदीपं गृहीत्वैव मया विभागेऽस्मिन्पदप्रवेशः कृतः । अत एष्वेव विषयेषु किंचित्कथनमावश्यकं, यतः भूतस्यास्य निःसारणेन विना वर्तमानेऽपि पदं निधातुं न शक्यं, किं पुनर्भविष्ये । अतः भूतभव्यभवत्प्रभुं प्रणिपत्य भगवन्तं, 'ऋतं वदिष्यामि,' 'मधु वक्ष्यामि मधु वदिष्यामि,, मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यः' इति प्रतिज्ञाय कथयामि यत्कथयितव्यमिति ।

वर्तमानेस्मिन्कालिकालसमये 'मृता संस्कृतभाषा, अवनतिं प्राप्तेयं देववाणी' इति वृथैव मत्वा, यदायदा आधुनिका विद्वासः तस्या उद्धारार्थं संजीवनार्थं वा, विचारविनिमयं कर्तुं संमिलंति, तदा तेषां संमुखे, एक एव विचारः प्रकटीभवति यत् एषा भाषा सर्वेषां विद्यार्थिनामावश्यकी कर्तव्या इति । न विद्यते तेषां पंडितानां सविधे अन्यः कश्चिदुपायः । तन्मते तु एषैवैका संजीविनी मात्रा यस्याः सेवनात्सर्वा दुर्गतिर्दूरीभविष्यति । किंतु 'अयि, एवं विचारयन्तः सहृदयाः, किं भवद्भिश्चिन्तितं, का गतिर्भविष्यति वराकाणां विद्यार्थिनां, कियान् भार आरोप्यते तेषु स्कंधेषु अनेन मार्गेण, किं कोमलगात्राः ते छात्रा एतद्गुरुतरं भारं वोढुं समर्था न वेति' मे प्रश्नः । पश्यन्तु भवन्तः तेषां दयनीयामवस्थाम् । 'माता परा देवता' इति मातृभाषाया अभ्यासस्तु सर्वैरेव कर्तव्यः । राष्ट्रभाषेति कांचिदपि भाषामंगीकृत्य, येषां सा मातृभाषा जन्मभाषा वा न स्यात्तैः सर्वैः सापि निश्चितमेवाभ्यसनीया । अस्मिन्युगे सर्वेषां सुखसाधनानां भौतिकशास्त्राधीनत्वात्, तद्विषयकाणां ग्रंथानां विशेषतः पाश्चात्त्यभाषासु वर्तमानत्वात्, आंतरराष्ट्रीयविषयेषु तासामेव भाषाणां प्रयुक्तत्वाच्च, तासु सर्वासु भारतीयानामस्माकं आंग्लसंबन्धवत्वाच्च, आंग्लभाषाया अभ्यासोऽपि कर्तव्य एव । एवं मातृभाषेति एकस्या भाषायाः, बोधभाषेति द्वितीयस्याः, उपयुक्तभाषेति तृतीयस्याः भाषाया अभ्यासभारे यदि चतुर्थ्याः 'सांस्कृतिकभाषा' इति संस्कृतभाषाया अभ्यासः संयुज्यते, तर्हि त्रिगुण एष भाषाभ्यासभरश्चतुर्गुणो भवेत्, तद्भारसंपीडितानां पिण्डितांगानां विद्यार्थिनां का गतिर्भूयात, कीदृशो वा अभ्यासः स्यादेकस्या अपि भाषाया आसु चतसृषु भाषासु इति विचारः न केनापि क्रियते ।

अन्यच्च, किममराणां देवानां देववाणी एषा अमरभारती सत्यमेव मृतप्राया, चेत्, किं तस्याः संजीवनार्थं एष एव उपाय इत्यपि विचारणीय एव विषयः । संस्कृतभाषापण्डितप्रकाण्डैः मातृभाषासदृशेन धाराप्रवाहेण संस्कृतभाषाभाषिभिर्विद्वद्भिः कथंविधा कृता संस्कृतभाषाया उन्नतिः, के ग्रंथा निर्मिताः, केषु शास्त्रेषु कृतं सम्यक् संशोधनम्, को लाभो वा प्रदत्तो भारतीयेभ्यः इति प्रश्नेषु पृष्टेषु किमुत्तरं स्यादिति कथनमनावश्यकमेव । किमेषु पण्डितेषु बहुभिः

'टिड्ढाणञ्, द्वयसच्, चुटू, ङसिङसोः, तिप्तस्झिसिप्थस्थमिब्वस्मस्ता, हशिच, ष्टुनाष्टुस्नइञ्, शश्छोऽटि यचोऽन्त्यादिटि । लोपोव्योर्वलि, वृद्धिरेचि, यचिभं, दाधाघ्वदाप्, छेचटेरित्यब्दानखिलान्नयंति कतिचिच्छब्दान्पठन्तः कटून्' इति सुभाषितं न कृतार्थीकृतम् ? अन्यैः कैश्चित्किमयं घटः, अयं पटः, एषोवच्छेदकावच्छेधभावः इति पाठने एव न यापिता दिवसाः ? एषु पण्डितेषु कतिभिः वेदविद्या अधीता ? कतिभिर्वेदान्तवागीश इत्युपाधिधारिभिरपि

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

इति श्लोकं विवृण्वद्भिः, एतेभ्य एव गीतासिद्धान्तो मथित' इति वा प्रदर्शितम् ? कैरेभिः सायणभाष्ये दोषाः प्रदृष्टा अथवा शार्मण्यदेशीयैः पण्डितैः सायनभाष्ये प्रदर्शितानां दोषाणामपाकरणं कृतम् ? केषां वा अस्माकं वैदिकसिद्धान्तानां स्वस्याचरणे निवेशितानां कृत उपदेश एभिः ? क्व ते अस्माकं प्राचीनाचार्याः द्रोणसदृशाः 'अग्रतश्चतुरो वेदान्पृष्ठतः सशरं धनुः' धारयन्तः 'इदं ब्राह्मिदं क्षात्रं शापादपि शरादपि' इति स्वस्याचरणेन च समर्थयन्तः, क्व च आधुनिका वयमाचार्यब्रुवाः येषां 'जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् । मनो दग्धं परस्त्रीभिः,' येषां च विषये निर्भयं वक्तव्यं एषां शापात् कुतो भयम्' इति । भवतु को लाभ एभिर्विचारैः । एषां सार एव यत्केवलं संस्कृतभाषायां अभ्यासस्यावश्यकीकरणेन न कोपि लाभो भवेदिति ।

अधुना विचारयाम संस्कृतपाठशालानामुद्धारस्य विषयम् । यथास्थिताभिराभिः न कोऽपि महान् लाभः तत्रत्यानां छात्राणां, तास्वध्यापनकार्यं कुर्वतामध्यापकानां, तदर्थं द्रव्यव्ययं कुर्वतां सर्वकाराणां, (सरकार' इति अर्थे प्रयुक्त एष शब्दः ), तद्द्रव्यमंशांशभागैः ददतां कर्षकाणां, कर्मकराणां, प्रजाजनानामितरेषां च, इत्यस्मिन्विषये न विद्यते केषांचिदपि वैमत्यम् । यथोद्घोषितमस्मादेवाध्यक्षस्थानात्कैश्चिदध्यक्षमहोदयैः यत् 'आंग्लसर्वकारेण प्रवर्तिताभिः पाठशालाभिः सर्वकारसेवकास्तु निर्मिताः, आभिः प्राच्यपाठशालाभिर्हन्त तदापि न कृतं इति । एतत्परमार्थतः सत्यं चेदेष विषयो हर्षस्य न शोकस्य ।

यतो नेच्छामो वयं यदाभ्योऽपि पाठशालाभ्यः सर्वकारप्रवर्तितसेवकनिर्माण-यंत्रालयेभ्य इव प्रतिवर्षं सहस्रशः श्ववृत्तिमेव स्वीकरिष्यमाणैः, अधिकारिणां संमुखं स्वलांगूलचालनेनैव पिण्डपोषकैः, सेवां विना किंचिदपि अन्यत्कार्यं कर्तुमक्षमैः, पुरुषकारहीनैः, पुरुषैः बहिर्निर्गंतव्यमिति । किंतु चरमा सीमेयं अधःपातस्य यदाभ्यः पाठशालाभ्यो निर्गता युवानः सर्वकारसेवकानामपि सेवकाः संजाता इति । अत्र आसामुद्धारस्तु अवश्यमेव कर्तव्यः । किंतु अस्य अधःपातस्य कारणं सम्यक्प्रागुज्ञातव्यमेव । यतः 'निदानमकुर्वता वैद्येन प्रयुक्तमगदं रोगहरणे समर्थं न भवति' इति सुविदितमेव सर्वेषाम् ।

अथ विचार्यमाणे कारणे अस्य अधःपतनस्य, भूतपूर्वैः परकीयैः पाश्चात्यपंडितैः 'मेकाले' प्रभृतिभिः, अस्मत् संमुखे यः अपूर्वः पश्चिमः शिक्षाया आदर्शो धारितः, स एवात्र निदानमिति स्पष्टमेव प्रतीयते । भारत-वासिनां पुरतः विपरीतदर्शकेन आदर्शसदृशेनानेनादर्शेण यदस्माकं दक्षिण-मासीत्तद्वामं, यद्वाममासीत्तद्दक्षिणं दर्शितं । यैरस्माभिः तेनादर्शेणान्यथा मन्य-मानैरद्युना 'अर्थकामपरो धर्मः' इति धार्यते । येषां पण्डितानां विषये, आदिमानवेन मनुना, सेवां श्ववृत्तिं व्याख्याय 'तया जीवेत्कदापि न' इत्या-दिष्टं तैरेवास्माभिः पण्डितैः सैव श्ववृत्तिः स्ववृत्तिरिति स्वीकृता । यस्मिन् भारतवर्षे श्रीः सर्वदैवं सरस्वत्याः सेविका आसीत् तस्मिन्नेव स्थाने आंग्लसर्व कारणां प्रसादेन यदा आंग्लपाठशालाः प्रवर्तिताः, नवीनाः अभ्यासक्रमा अंकिताः, परीक्षापरिपाट्या प्रमाणपत्रदानं प्रवृत्तम् परीक्षानुसारेणच वेतनानि नियुक्तानि तदाप्रभृत्येव सरस्वतीललाटे श्रीसेवा आलिखिताभूत् । आंग्लराज्ये पाठशालागमनं छात्राणां न ज्ञानलाभार्थं, अपितु आधुनिकरीत्या प्रवृत्तानां परीक्षाणामर्थं, परीक्षाप्रदानमपि न ज्ञानप्राप्तये किंतु प्रमाणपत्रावाप्तये, स्वनामाग्रे केषांचिदक्षराणां संयोगाय वा, अन्तत एतत्सर्वं 'स्वामिचरणेषु अत्यंतनम्रभावेन, संपूर्णादरेण च इयं मे विज्ञप्तिः यदेवं प्रकारकं स्थानं रिक्तमिति श्रूयते तत्र एवंविधैरक्षरैर्युक्तनामाहं नियोक्तव्य' इति प्रकारकैः प्रार्थनापत्रैः सेवास्वीकर-णाय संजातम् । एवं स्वाभाविकतयैव सर्वा विद्याः, सकलाः कलाः अस्माभिः केवलमुदरंभरणायैव नियोजिताः । अस्या एव प्रवृत्तेरयं परिणामः यत्संस्कृत-पाठशालाः शून्यप्रायाः, तत्रत्यमध्यापनमपि तैरेव परीक्षोच्चरणसाध्यैर्दोषैः पूर्णं,

छात्राश्च सेवकानामपि सेवापात्राणि । अतः आसां पाठशालानामुद्धारः कर्तव्यश्चे-त्परमावश्यकं नूतनादर्शसंस्थापनम्, तेन विना च अयमुद्धारः अशक्यप्राय एव।

भोभोः सुहृदः, अनेन विपरितादर्शेनैव अस्माकं मतिः, अस्माकं धृतिः, अस्माकं शक्तिः (का कायिकी, का वाचिकी का वा मानासिकी), अस्माकं श्रीः किंबहुना सर्वमेवास्माकं स्वार्थपरमेव संजातम् । स स्वार्थोऽपि परमार्थतः स्वस्य आत्मनः अर्थं प्रयोजनं परित्यज्य परकीयार्थपरो भूत्वा तेषामेव हितं साधितवान् । पश्यत, अस्माकं मध्ये वयं विद्वांसः वयं विद्वांसः इति के मन्यन्तेस्म ? ये तु आंग्लविद्याविभूषिताः, आंग्लभाषया भार्यया सहापि संलापं कुर्वाणाः, परकीयपद्धत्यैव न केवलमात्मवपुः किन्तु स्वरमणीनामपि रमणीयं शरीरं भूषयन्तः, आसने, शयने, भोजने सर्वत्रैव पाश्चात्यपद्धतिमेवाङ्गीकुर्वाणाः त एव पंडिताः त एव नेतारः, ते हि लोकनायकाः इत्यासीन्मतिः सर्वेषाम् ।

'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्'

इत्ययं सिद्धान्तोऽप्यस्माभिः परिवृत्य यद्यत्परकीयं तत्तत्सुखकारकं शोभनं च, यद्यदस्माकं प्राचीनं तत्तत्सर्वं त्याज्यं इति सिद्धान्तः स्वीकृतः । घटोत्कचमायया-तया मोहितैः सर्वैः स्वदेशीयानि वस्तूनि हेयानीति मत्वा परदेशेषु संपन्नानि सर्वाणि वस्तून्युपादेयानि कृतानि । सर्वाण्यस्माकं कार्याणि, लेखनानि न स्वकीयया कयाचिदपि भाषया, अपितु आंग्लभाषयैव संपन्नान्यभवन् भवंति चाद्यापि । किन्तु भुवनफलके काल्या सह क्रीडता कालेन एवमक्षाः क्षिप्ताः, यदस्माकं मोहिता धीः महात्मना केनचिन्मोहनदासेनैव मोहमुक्ता कृता । 'धियो यो नः प्रचोदयात्' तस्य सर्वान्तः प्रेरकस्य स्वातंत्र्यसवितुर्वरेण्यं भर्गः पूर्वक्षितिजस्यो-परि उदयं प्राप्य सर्वत्र प्रसृतम् । तेन तेजसा नेत्रेषून्मीलितेषु 'यूयं वयं वयं यूयं' इति या संकीर्णा मतिरस्माकमासीत् सा स्पष्टा भूत्वा 'यूयं यूयं वयं वयं' इति व्यक्तवाचा उद्घोषितवती । समाप्तास्माकं मोहरात्रिः । 'शयानः कलिः' पलायितः । 'संजिहानस्तु द्वापरः' निष्क्रान्तः । 'उत्तिष्ठंस्त्रेता' जागृतः । चरन्तो वयमधुना कृतसंपादने बद्धपरिकराः । स्वतंत्रतायुतेस्मिन्वर्षे प्रथमे

त्रयोविंशमपि संमेलनमेतत् प्रथमप्रायमेव, अस्माकमयं संस्कृतविभागोऽपि प्रथम-एवं भवितुमर्हति । तस्मादस्माभिः सर्वैरेव कार्यं, यदयं विभागः, यद्यपि सर्वेषां विभागानामवमः, तथापि कार्यभारेण सर्वेषु विभागेषु परमो भूयादिति ।

अयि पंडितवर्याः, वयं स्वाधीनाः संजाता इति तु सत्यमेव । इदं स्वातंत्र्यमधु सर्वैरस्माभिः अर्के एव वित्तं, तस्मात्तद्वेदने यत्पर्वतव्रजनमावश्यकं भवति तत्तु न कृतमस्माभिः । तैस्तु तस्मिन्पर्वतारोहणे यानि कष्टानि स्युरनुभाव्यानि, तानि नानुभूतानि, तस्मात्पर्वतारोहणाधा विशाला दृष्टिः प्राप्यते सापि नाद्यापि प्राप्ता । स्वाधीनतां गतैरपि अस्माभिरद्यापि यानि साधनानि योग्यानीति निश्चितानि तानि सर्वाण्यपि पराधीनानि । ये प्रस्तावाः अस्मिन्विभागे आगामिनः, तेषां सूची अस्माकं मंत्रिवरेण मत्समीपं प्रेषिता । तस्याः सूच्या उपरि एकोऽपि दृष्टिक्षेपः यन्मयाधुना कथितं तत्समर्थयितुं पर्याप्तः । प्रथमः प्रस्तावः सर्वकारं साग्रहं किंचित्कर्तुं प्रार्थयति । किंकार्यं इति तु पश्चाद्विचारयिष्यामः । द्वितीयेन प्रस्तावेन अनेके व्यवस्थापका अधिकारिणः प्रार्थिताः । तृतीयेन च विश्वविद्यालयाः प्रार्थिताः । एभ्यः किं नैतत्स्पष्टं भवति यदस्माकं सर्वे एव प्रयत्ना अद्यापि प्रार्थनापराः । किं कार्यं इति विचारेति प्रार्थना, पुनः किंकरणीयमिति चेत्प्रार्थना एव, अन्ततः किमस्माकं कर्तव्यमिति चेत् प्रार्थना एव न किंचनान्यत् । अयि मान्याः विचारयन्तु यत्किं केवलाभिः प्रार्थनाभिरस्माकं कार्यसिद्धिः कदाचिदपि भूता भवति, भविष्यति वा? अस्माकं कर्तव्यं केवला प्रार्थना, यत्कार्यं तत्तु सर्वमन्यैः । किं नेयं चरमा सीमा पारतंत्र्यगर्ते पतितानां आत्मनो हस्तपादसंचालनेऽप्यसमर्थानां भारतीयपण्डितानाम्? अस्माकं प्रस्तावेषु न विद्यत एकोऽपि शब्द आत्मप्रयत्नसंसूचनपरः । यदस्माकं कर्तव्यं तत्तु एतेषां प्रस्तावानां प्रमाणीकरणं तदर्थं पत्रप्रेषणं च । एतदन्त्यन्तिमं कार्यं मंत्रिणो हस्तात् । अस्माकं सदस्यानां कर्तव्यमेतेनैव समाप्तं भवति । यदा तु स्थानां-दस्माद्वयं गमिष्यामः संवत्सरपर्यन्तं सुखेन स्वप्स्यामः, पुनरागामिनि वत्सरे पुनः प्रार्थनां कर्तुं मिलिता भविष्यामः । यदि कर्तव्यमस्माकमेवंप्रकारकं, हन्त हा, हा हन्त न कोऽपि लाभ एतादृशस्य संमेलनस्य, अस्य विभागस्य

वा । तस्मादस्माभिरधुना केषांचिदन्येषां प्रार्थनां त्यक्त्वा, भगवत्प्रार्थनां मनसि कृत्वा कश्चिदेक एव प्रस्तावः प्रमाणीकर्तव्यः येन वयं सर्वे तस्मिन्कार्ये बद्धपरिकराः स्याम, संवत्सरमिमं तदर्थे स्वयमेव प्रयत्नान्कांश्चित्करिष्याम, आगामिनि वर्षे किमस्माभिः प्रत्यक्षं कृतं तत्सर्वं संमेलनसंमुखं स्थापयाम च ।

अथ अस्यां समितौ 'आधुनिकशिक्षाविधौ संस्कृतस्य किं स्थानं भवेत्, इति विषये सर्वैरेवास्माभिः विचारः कर्तव्य एव । ममतु अस्मिन्विषये केवलमेतदेव कथनीयं यत्संस्कृतशब्दः अर्थद्वयपरो भवितुमर्हति । भाषापरः साहित्यपरश्च । तेन संस्कृत—भाषायाः स्थानं किं, संस्कृतसाहित्यस्य च किं स्थानमिति विविच्य विचारणीय एष विषयः । भाषाविषयः अन्यः, साहित्यविषयः अन्यः। साधनं भाषा, साध्यंतु साहित्यज्ञानम् । भाषा, संस्कृतभाषा सर्वैर्विद्यार्थिभिरभ्यसनीया न वेति विषये वैमत्यं भवितुमर्हति किंतु संस्कृतसाहित्यस्य— संस्कृतभाषायां ये ग्रंथा ग्रथिताः, यज्ज्ञानं संपन्नं, यानि शास्त्राणि पूर्णत्वं गतानि, 'वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं' इति येषां कीर्तिर्विधते ते वेदाः, सर्वाः स्मृतयः, अष्टादश पुराणानि इत्येतेषां सर्वेषां ज्ञानं भारतीयानामस्माकमावश्यकमित्यत्र न कोऽपि मतभेदः । एतेषां ज्ञानं संस्कृतभाषाज्ञानेन विनापि भवितुं शक्यं न वा, यद्यशक्यं तर्हि तदर्थं कियत् किंप्रकारकं भाषाज्ञानमावश्यकं इति विचारणीयोऽयं विषयः । विचारेऽस्मिन् भाषाज्ञाने साधने साध्यसाहित्यज्ञानवस्त्वे ऽध्यं माभूदित्येव मे प्रार्थना ।

संस्कृतभाषाविषये न मे हीनोऽभिमानः । अस्यैव मासस्यारम्भे उत्कलाध्यक्षण 'काटजू' महोदयेन विश्वविद्यालयानां समितौ प्रास्ताविके भाषणे राष्ट्रभाषानिर्माणविषये या सर्वेषां तत्र संमिलितपण्डितानां प्रार्थना कृता, तत्र तत्र आंग्लभाषायाः स्थाने संस्कृतभाषायाः स्थापनं प्रतिपादितं. तत्पठित्वा संतोषेण अभिमानेन च पूरोत्पीडमदृशं जातं मे हृदयम् । इयममरभाषा सर्वेषां प्राकृतभाषाणां जन्मदात्री माता, इमां देववाणीं सर्वे भारतीयाः सत्कुर्वन्ति, अनया जननीतुल्यया भाषया सर्वासां कन्यकासदृशीनां अन्यासां प्रान्तीयभाषाणामहमहमिका विरता भवेत, अस्यै एव प्राचीग्रंथज्ञानाय सर्वे नमस्कुर्वन्ति, अस्या एव सर्वाः प्राकृतभाषाः पुष्टा जाताः, अस्या एव देवनागरी लिपिः

सर्वैराद्रियते, अस्यामेव सर्वमस्माकं प्राचीनं ज्ञानमित्यत्र न विद्यते वैमत्यम्। किंतु विद्यमानेष्वपि सर्वेष्वेषु कारणेषु इयं संस्कृतभाषा सर्वेषां प्राकृतजनानामाकलने गमिष्यति न वेति संदेहः विद्यत एव। मम तु स्पष्टमेव मतं यदेतदशक्यप्रायमेव। अन्यच्च यदीयं देववाणी, अमरभारती, सर्वैरेव मर्त्यैः प्राकृतजनैः प्रयुक्ता भवेत् तस्या दैवत्वमेव न लुप्येत, स्वसिंहासनात्प्रच्युता न स्यात्, सामान्यजनसम्मिश्रणेन अनादरणीया च सा किं न भविष्यति इत्ययमपि विचारः स्फुरत्येव। अस्तु।

भगवन्तो विचारवन्तः सज्जनाः, अकस्मादपर्याप्तप्रयत्नप्राप्तस्वातंत्र्यैरस्माभिः अस्मिन् संक्रमणसमये दूरदृष्टिभिर्भाव्यमेव। अस्मासु बहवो लोकनायकाः अधुना दोलाचलदृष्टय इव संजाता दृश्यन्ते। दोलास्थितः पुरुषः यदा दोला परमां कोटिमेकां गच्छति, अधोदृष्टिस्तदा स भवति। एवं समयेस्मिन्यद्यत्परकीयं तत्तत्सर्वमहितकरं इति मतिरस्माकं कदाचिद्भवेत् सा वर्जनीया खलु। कविकुलगुरोः कालिदासस्योपदेशः किंचित्परिवृत्य

'अस्माकमित्येव न साधु सर्वं
पारक्यमित्येव न हेयमन्यत्' इति ग्राह्यः।

नव्यानां कल्पनानां परिवर्जनं स्वाभाविकमस्मिन्नात्मसन्मानावसरे। किंतु यथा परकीयस्य सर्वस्य दासवृत्त्या स्वीकरणेन आत्मनो विभवयुतस्य महतो गौरवस्य विस्मरणं घातकं भवति तथैव परकीयस्य सर्वस्य तुच्छमिति विवर्जनेन असूर्यंपश्या राजदारा इव पञ्जरबंधनमपि न हितकरम्। पाश्चात्यसंस्कृत्याऽस्माकमहितं न कृतमिति न। परंतु संस्कृतिसंघर्षेणानेन ये लाभा जातास्तेऽपि नाकिंचित्कराः। मोहावरणघातिना इतिहासप्रदीपेन यावत्कालपर्यन्तं दृष्टिरस्माकं भूतकाले गच्छति, तावतः कालाद्भारतीयाः संग्राहकवृत्तयः समन्वयबुद्धय इति प्रसिद्धाः। वराहमिहिराचार्येण ज्योतिषविषये यत्कथितमासीत् 'म्लेच्छाहि यवनास्तेषु सम्यक्शास्त्रमिदं स्थितम्। ऋषिवत्तेऽपि पूज्यन्तेऽस्माभिः' इति तत्सर्वेष्वेव विषयेष्वासीत्। किंतु यदा प्रभृति परित्यज्येमां संग्राहिकीं समन्वयबुद्धिं यत्किंचन ज्ञानं विद्यते तत्सर्वमस्माकमेव ग्रंथेषु प्राचीनेषु इति वृत्तिः स्वीकृता तदा प्रभृत्येव वयं कूपमण्डूकसदृशा उदुम्बरकीटकसमाना वा जाताः: किमद्य प्राप्तस्वातंत्र्यां वयं पुनरपि

तामेव प्रवृत्तिमाश्रित्य विचारयिष्यामो, विचरिष्यामश्च, पुनरपि संकोचभावेन संकुचितमतयो भविष्याम, वा इति मे प्रश्नः। भोभो मद्बान्धवाः, अद्य सर्वाण्युन्नतिशीलानि राष्ट्राणि, एकस्यापि रुधिरबिंदोरधःपतनाद्विना प्राप्तस्वातंत्र्याणां प्राप्तस्वातंत्र्यैरेव परस्परं कलहं कृत्वा असंख्यातभ्रातृरक्तेन रंजितवसुंधराणां भारतीयानां मुखं चकितचकितं प्रेक्षन्ते। किमस्मिन्काले वयं सुदृढबुद्धयोऽनुन्मार्गगामिनो भूत्वा बुद्धेन सत्यात्मकेन अहिंसापरेण किंतु समर्थेन स्वाचरणेन तेषां सन्मार्गदर्शका भवेम, आहोस्वित् संक्षुब्धमतिभिरदूरदृष्टिभिरैः सह स्वयमपि अवनतिपराः अदूरदृष्टयो भूत्वा तानि नैराश्यपराणि करिष्याम? अद्य स्वाधीने भारते यद्वयं स्वयमेवेच्छामस्तदेव भविष्यति। अतएव गुरुतममस्माकमुत्तरदायित्वम्। अत एवच यत्कर्तव्यं तत्पूर्णसाधकबाधकविचारपूर्वकमेव कर्तव्यमित्येव मे प्रार्थना।

अस्मिन्संक्रमणसमये आंग्लपाठशालासु आंग्लभाषाप्रयुक्तविश्वविद्यालयेषु संस्कृतशिक्षाकार्यं कुर्वतामस्माकं शिरसि महदुत्तरदायित्वम्। अस्माभिः सर्वैरेव केचिदेवं प्रकारकाः सारवन्तः प्राचीना ग्रंथा अधीता यत्र 'अर्धमात्रालाघवेनापि पुत्रोत्साहो मन्यते स्म। कानिचिदेवंविधानि च आधुनिकानि पुस्तकानि पठितानि यत्र महति तुषनिचये द्वित्रा अपि तण्डुलकणाः कष्टेनैव प्राप्या भवंति। द्विविधानामपि ग्रंथानामध्ययनेनास्माकं मतिः ज्ञातुं समर्थास्ति किं सारवत् किमसारवच्च। ग्रंथाध्ययने शब्द एकोऽपि न हेयः इति प्राचीना पद्धतिः, पुस्तकानां सारांश एव ग्राह्यो न सर्वे शब्दा इति पाश्चात्यपद्धतिः। द्वे अप्येते पद्धती अस्माभिरभ्यस्ते। अस्माकं प्राचीनं साहित्यं निर्मितिसमये यद्यपि कामधुग्दुग्धसदृशमतिमधुरमासीत् इत्यत्र न कोऽपि विवादः। परंतु चिरकालं तथैव स्थितत्वात्संस्कृत्यन्तरमिश्रणेन च तदधुना दधिसदृशमाम्लं घनीभूतं च जातम्। अत एव तत्सामान्यजनानांमरुचिकरं। अद्य तस्मिन्दधिन प्राकृतभाषाजलस्य पर्याप्तया मात्रया मेलनं तस्य सम्यङ्मन्थनं कृत्वा सामान्यजनार्थं तक्रीकरणम्, विशिष्टजनार्थं तस्मान्नवनीतनिःसारणमस्माभिरेव कर्तव्यम्। यंत्रालययुगेऽस्मिन् ज्ञानपण्यैर्वणिग्भिर्यत्साहित्यं वाणिज्यार्थं प्रकटीकृतं, तदपि सुपरिचितमस्माकम्। बालभावेनाधुनिका एते लेखकाः, अस्माकं

प्राचीन-ग्रंथ-विषये किंप्रकारकान्वा लिशशब्दानू प्रयुंजंति तदपि जानीमो वयम् । एतान्मालिशिलेखकान्प्रति वर्तते औदासीन्यमस्माकं प्राचीनविद्यापण्डित-प्रवराणाम । किंतु 'बालादपि सुभाषितं ग्राह्यम् इति न्यायेन यद्यदस्मिन्नवीने साहित्ये सुभाषितं, सुष्ठु लिखितं, सम्यक् प्रतिपादितंच, तत्सर्वं पिण्डीकृत्य संस्कृतभाषाशर्करया मिश्रीकृत्य तस्य 'मोदकांल्लड्डुकांश्चैव कर्णशष्कुलिकांस्तथा कृत्वा तेषा नैवेद्यं प्राचीपण्डितेभ्य एभ्यः समर्पणीयमस्माभिरेव ।

अयि सज्जनाः, एवंकृते सति प्राचीना विद्या आधुनिकानामास्वाद्या भविष्यंति, आधुनिकविचारसरणयः प्राचीनपण्डितानामपि परिचिता भविष्यंति । अस्माकं संस्कृतमात्रपण्डिताः कृष्ण—योगेश्वरा इव आत्मानन्दसमाधिनिर्भराः सन्ति । पक्षान्तरे प्राकृतमात्रपण्डिताः फाल्गुनधनुर्धरा इव यत्रतत्र धनुःसंचा-लनेन, गुणटणत्कारेण, शरसंयोजनेन च आत्मक्रीडापराः संदृश्यन्ते । एषां योगेश्वराणामेषां धनुर्धराणांच संयोगं कारयितुं वयमेव समर्था अस्य विभागस्य-सदस्याः. न केप्यन्ये । अतो वः सर्वांस्तत्कर्तुं संप्रार्थ्य, महाभारते युद्धे यथा योगेश्वरकृष्णधनुर्धरार्जुनसंयोगेन मोहनिरासपौरुषोदयपूर्वको विजयः संजातः, तथैवास्य विभागस्य, एषां योगेश्वराणामेषां धनुर्धराणां च संमेलनेन, उन्नति-र्भूयादिति समाशास्य संजयवाक्येन गीतान्तेनोपसंहरामि यत् ।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ इति.

---

जयतु जयतु हिन्दुस्थानमेतत्पुराणम्
जयतु जयतु हिंदस्थानमेतन्नवीनम् ।
जयतु जयतु शिक्षामेलनं भारतीयम्
जयतु जयतु तत्र प्राच्यविद्याविभागः ॥

---

# श्रीरत्नमाला

ले.—विद्याप्रवीण, शिरोमणि पि. पि. एस्. कलाशास्त्रोपाध्यायः (चिदम्बरम्)
पि. एस. देवनाथाचार्यः

वन्दे बृन्दारकेन्द्रादिसुन्दरीबृन्दवन्दिताम् ।
दन्तावलगिरीशानकान्तां कान्तायतेक्षणाम् ॥१॥

महामहिमशालिनी सकललोकसृष्टिस्थिति-
प्रणाशनविधायिनी मुनिमनस्तटीवासिनी ।
इभाद्रितटवार्तिनी विनतवैरिविलासिनी-
तनोतु मम संपदं नरकवैरिसीमन्तिनी ॥२॥

कौबेरीं श्रियमातनोति नितरां दारिद्र्यभाजां नृणां
स्तोकप्रज्ञजने करोति वचसामन्यादृशीं वैखरीम् ।
ऐकात्म्यं परमञ्च मांसलयते सत्सद्मनावासिनां
कांचीकुंतलमालिके जननि ते वीक्षाझरी मंजुला ॥३॥

परमफणितिवृन्दैर्नित्यमुद्घुष्यमाणं
करिगिरिपतिकान्ते वैभवं ते महान्तम् ।
मुनिकुलतिलकेनाऽऽभाषितं शक्तिजेना-
प्यहह कतिचनान्धाः सर्वथाऽपह्नुवन्ति ॥४॥

नानाजन्मपरंपरामरुतटीपान्थत्वमासेदुषां
त्राणायाखिलदेहिनां प्रणमतां त्यक्त्वापि दुग्धाम्बुधिम् ।
दिव्यामप्यपराजितां करुणया कांचीपुरीदीपके
मातङ्गाद्रितटे बिभर्षि नितरामर्चात्मकं विग्रहम् ॥५॥

कचाकचि वितन्वती विचकमेचकाम्भोरुहैः
पुराणमपि पूरुषं प्रणततन्त्रमातन्वती ।
अशेषविपदावलीनिरसनाय लोकाम्ब ते
चकास्तु हृदि मे सदा प्रचुरदिव्यवीक्षाझरी ॥६॥

---